[1]कुसुमतल्पकल्पनाकुलेन धारागृहजलयन्त्रप्रवर्तनो[2]द्धृतार्तिना मणिकुट्टिमक्षालनाग्रहस्तेन[3] च सं[4]जलकिञ्जल्कजलजोपचारप्रकरसंभ्रान्तेन च शि[5]शिरभूगृहाभ्यन्तरप्रत्यवेक्षणदक्षेण चोद्यानदीर्घिकातटलतागहनमण्डपसे[6]कतापहारिणा च म[7]लयजरसचन्द्रार्द्रजलचन्द्राश्रयावधानदानोद्यतेन चाप्तपरिजनेनोपचर्यमाणस्यापि काष्ठीभूतदेहस्य दा[8]हक्षमो झटित्येवारुरोह परां कोटिं कामानलः । राज्ञ एव तुल्यावस्थस्य महाश्वेतोत्कण्ठया पुण्डरीकात्मनो वैशम्पायनस्य च ।

तस्मिन्नेव चान्तरे त[9]त्संधुक्षणायेव प्रवर्तयन्सरसकिसलयलतालास्योपदेशदक्षं दक्षिणानिलम्, आलोलरक्तपल्लवप्रा[10]लम्बान्क[11]म्पयन्नशोकशाखिनः, वा[12]ञ्छितमुकुलमञ्जरीभरेण न[13]म्रयन्बालसहकारान्, उत्कोरकयन्कुरुबकैः सह बकुलतिलकचम्पकनीपान्, आ[14]पीतयन्किंकिरातैः क[15]कुभान्, विकिरन्नतिमुक्तकामोदम्, उद्दामयन्किंशुकवनानि निरङ्कुशयन्कामिजनमनांसि,

---

म्भसार्द्रो योऽनिलो वायुस्तं संचारयति प्रवर्तयतीत्येवंशीलः स तथा तेन । कुसुमैः पुष्पैर्या तल्पकल्पना शय्याविरचना तेनाकुलेन व्याकुलेन । धारागृहस्य जलयन्त्राणां प्रवर्तनात्प्रक्षरणादा ईषद्धृता दूरीभूतार्तिर्यस्य स तेन । मणिकुट्टिमस्य क्षालना धावनं तत्राग्रहस्तो यस्य स तेन । 'आयस्तेन' इति पाठ आयस्तेन खिन्नेनेत्यर्थः । सजलानि जलसहितानि किञ्जल्कजलजानि केसरोपयुक्तकमलानि तेषामुपचारः प्रकार उपचरणं तेन संभ्रान्तेन मूढेन । शिशिरं शीतलं यद्भूगृहं भूमिस्थं सदनं तस्य अभ्यन्तरं मध्यं तस्य प्रत्यवेक्षणं गवेषणं तत्र दक्षेण चतुरेण । उद्यानस्य दीर्घिका वापी तस्यास्तटं तीरं तस्य लतागहनमण्डपो जनाश्रयस्तत्र यः सेकः सिञ्चनं तेन तापमपहरतीत्येवंशीलः स्वभावः स तथा तेन मलयजरसश्चन्दलद्रवश्चन्द्रः कर्पूर आर्द्रं जलं चन्द्रस्य शशाङ्कस्याश्रय आश्रयणमेतैरवधानदानं समाधिदानं तत्रोद्यतेनोद्युक्तेन । 'अवधानसमाधानप्रणिधानानि तु समाधौ स्युः' इति हैमः । आप्तो विश्वस्तो यः परिजनः परिच्छदस्तेनोपचर्यमाणस्योपचारविषयीक्रियमाणस्यापि काष्ठीभूता देहस्य दारुसादृश्यमापन्नशरीरस्य दाहे क्षमः समर्थः कामानलो मदनवह्निः क्षणेन परां कोटिं झटित्येव तत्कालमेवारुरोहारूढवान् । राज्ञ एव तुल्यावस्थस्य सदृशावस्थस्य महाश्वेताया उत्कण्ठयोत्कलिकया पुण्डरीकात्मनो वैशम्पायनस्य च । मदनानलः परां कोटिमारुरोहेत्यत्रापि संयोज्यम् । तृतीयान्तानि सर्वाण्याप्तपरिजनस्य विशेषणानि ।

तस्मिन्नेव चान्तरे विचाले तस्य संधुक्षणायेव तदुद्दीपनायेव सुरभिमासो वसन्तः प्रावर्तत प्रवृत्तो बभूव । 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । गन्धोत्पले सौरभेय्यां शल्लकीमातृभेदयोः ॥ सुगन्धे च मनोज्ञे च वाच्यवत्सुरभि स्मृतम्' इति विश्वः । किं कुर्वन् । प्रवर्तयन्प्रवृत्तिं कारयन् किम् । दक्षिणानिलं मलयमारुतम् । कीदृशम् । सरसानि रसोपयुक्तानि किसलयानि यासामेवंविधा लता वल्लयस्तासां लास्योपदेशो नृत्योपदेशस्तत्र दक्षं चतुरम् । आलोलाश्चपलाश्चञ्चला रक्तपल्लवा लोहितकिसलयास्तेषां प्रालम्बाः समूहा येषु तानशोकशाखिनः केसरवृक्षान्कम्पयन् । वाञ्छिते मुकुलमञ्जर्यौ कुड्मलवल्लर्यौ तयोर्भरेण बालसहकारान्नवीनचूतान्नम्रयन्नम्रतां नयन् । कुरुबकैर्वृक्षविशेषैः सह बकुलः केसरः, तिलको वृक्षविशेषः, चम्पको हेमपुष्पकः, नीपः कदम्बः, एतानुत्प्राबल्येन कोरकयन्कलिकामुत्पादयन् । 'कलिका कोरकः पुमान्' इत्यमरः । किंकिरातैः कुरण्टकैः सह ककुभानर्जुनवृक्षानापीतयन्पीतान्कुर्वन् । 'ककुभो वीणाप्रसवे रागभेदेऽर्जुनद्रुमे' इत्यनेकार्थः । अतिमुक्तकस्य माधवीलताया आमोदं परागं विकिरन्विक्षिपन् । किंशुका ब्रह्मपादपास्तेषां वनान्युद्दामयन्नुत्कटयन् । कामिनो जनास्तेषां मनांसि चेतांसि निरङ्कुशयन्नुच्छृङ्खलयन् ।

---

१ सकुसुमतल्प. २ आहत; आहित; अकृत. ३ आयस्तेन. ४ सजलपङ्कजकिञ्जल्ककह्लारप्रकरप्रचारणसंभ्रान्तेन. ५ अन्धकारशिशिर. ६ संतापापहारिणा; संतापकारिणा. ७ मलयजरसचन्द्रार्द्रजलार्द्रचन्द्राश्रय; मलयजजलार्द्रचन्द्राश्रय. ८ दाहहेतुः. ९ तत्क्षणमेव. १० प्रलम्बान्. ११ स्तबकयन्. १२ विकसित. १३ आनम्रयन्; आनमयन्. १४ आपातयन्. १५ ककुभः.

निर्मूलयन्मानम्, अपमार्जयँल्लज्जाम्, अपाकुर्वन्कोपम्, [1]अपनयन्ननुनयव्यवस्थाम्, [2]व्यवस्थापयन्[3]हठचुम्बनालिङ्गनरतस्थितिम्, समुल्लासयन्मकरध्वज[4]रक्तध्वजानिव किंशुकानि, सकलमेव महारजतमयमिव रागमयमिव [5]मदनमयमिवोन्मादमयमिव प्रेममयमिवोत्सवमयमिवौत्सुक्यमयमिव जनयञ्जीवलोकम्, किसलयितसकलकान्तारकाननोपवनतरुरुत्फुल्लचूतद्रुमामोदवासितदशाशान्तरो मधुमद[6]मधुरकोकिला[7]लापदुःखिताध्वगजनश्रुतिरनवरतमकरन्दसीकरासारदुर्दिनोन्मादितसकलजीवलोकहृदयो मदाकुल[8]भ्रमद्भ्रमरझंकार[9]कातरितविरहातुरमनोवृत्तिरात्मसंभवैकोल्लासकारी भरात्परावर्तत सुरभिमासः । येन च कुसुमधन्वनः परमास्त्रेण मधुना पर्याकुलितहृदया कादम्बरी संप्राप्ते भगवतः कामदेवस्य [10]महे महता प्रयत्नेन कथंकथमप्यतिवाहितदिवसा श्यामायमानदशदिशि सायाह्ने स्नात्वा [11]निर्वर्तितकामदेवपूजा तस्य पुरश्चन्द्रापीडमतिसुरभिशीतलैः स्नापयित्वाम्भोभिरा चरणाद्विलिप्य मृगमदामोदिना हरिचन्दनेन सुरभिकुसुमस्रग्भिरुद्ग्रथितं कुन्तलकलापं [12]कृत्वैककर्णा[13]र्पितसत्किसलयाशोकस्तब-

---

मानं गर्वं निर्मूलयन्बुध्नत उत्पाटयन् । लज्जां त्रपामपमार्जयन्फोटयन् । कोपं क्रोधम् । अर्थात् कामिजनकृतम् । अपाकुर्वन्दूरीकुर्वन्निराकुर्वन् । अनुनयव्यवस्थां प्रणिपातमर्यादाम [illegible]नयन्निराकुर्वन् । हठेन बलेन चुम्बनमास्यलेहनम्, आलिङ्गनमुपगूहनम्, रतिः संभोगः, एतासां स्थितिं मर्यादां व्यवस्थापयन्व्यवस्थां कुर्वन् । मकरध्वजस्य कामस्य रक्तध्वजानिव किंशुकानि किंशुकपुष्पाण्यरुणवैजयन्त्य इव समुल्लासयन्प्रकाशयन् । [illegible]हारजतमयमेव सुवर्णमयमिव, रागमयमिवानुरागमयमिव, मदनमयमिव कंदर्पमयमिव, उन्मादमयमिव चि[illegible]विभ्रमयमिव [illegible]ममयमिव स्नेहमयमिव उत्सवमयमिव महोमयमिव औत्सुक्यमयमिव रणरणकमयमिव, एवंविधं सकल[illegible]व समग्रमेव जीवलोकं विष्टपं जनयन्विदधन् । किसलयिताः संजातकिसलयाः सकलाः समग्राः कान्तारकाननोपवनतरवो येन सः । तत्र कान्तारशून्या देवी काननं निर्मानुषं वनमुपवनं नगरसमीपवर्तिनम् । उत्फुल्लाः [illegible]फुल्ला ये चूतद्रुमा आम्रवृक्षास्तेषामामोदः परिमलस्तेन वासितं सुरभीकृतं दशदिशामन्तरं विचालं येन सः । मधुनो यो मदस्तेन मधुरो मिष्टो यः कोकिलालापस्तेन दुःखिता अध्वगजनाः पान्थजनास्तेषां श्रुतिः श्रवणं यस्मिन्सः । अनवरतं निरन्तरं यो मकरन्दसीकरासारो मकरन्दवातास्तबिन्दुवेगवद्वृष्टिस्तदेव दुर्दिनं मेघजं तमस्तेनोन्मादितान्युन्मादं प्रापितानि सकलजीवलोकहृदयानि येन सः मदाकुला ये भ्रमन्तो भ्रमराः शिलीमुखास्तेषां झंकारा झंकृतयस्तैः कातरिता कातरीकृता विरहातुरजनानां मनोवृत्तिर्येन सः । आत्मसंभवस्य कामस्यैकोऽद्वितीय उल्लासकारी प्रकाशकारी सुरभिमासः प्रावर्ततेत्यन्वयस्तु प्रागुक्त एव । येन कुसुमधन्वनः कंदर्पस्य परमास्त्रेणात्युत्कृष्टशस्त्रेण मधुना वसन्तेन पर्याकुलितहृदया व्याकुलितचित्ता कादम्बरी भगवतः कामदेवस्य मह उत्सवे संप्राप्ते समागते सति महता प्रयत्नेनोद्यमेन कथंकथमपि महता कष्टेनातिवाहितदिवसा अतिक्रान्तवासराः श्यामायमानाः कृष्णायमाना दशदिशो यस्मिन्नेवंभूता सायाह्ने संध्यायां स्नात्वा स्नानं कृत्वा निर्वर्तिता विहिता कामदेवस्य पूजार्चा यया सा तस्य कामदेवस्य पुरोऽग्रे चन्द्रापीडमतिसुरभिशीतलैरतिसुगन्धिशिशिरैरम्भोभिः पानीयैः स्नापयित्वा स्नानं कारयित्वा चरणाच्चरणावभिव्याप्य मृगमदः कस्तूरिका तस्यामोदः परिमलो विद्यते यस्मिन्नेवंभूतेन हरिचन्दनेन विलिप्य विलेपनं कृत्वा । 'हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे । ज्योत्स्नायां कुङ्कुमे च' इति विश्वः । सुरभीणि यानि कुसुमानि तेषां स्रग्भिर्मालाभिरुद्ग्रथित उद्बद्धः कुन्तलकलापः केशसमूहो यस्य स तं कृत्वा विधायैककर्णेऽर्पितो न्यस्तः सन्ति शोभनानि किसलयानि

---

१ उपनयन्. २ उपस्थापयन्; आस्थापयन्. ३ दृढ. ४ रक्तध्वजांशुकानि; रक्तांशुकानि. ५ रतिमयमिवोत्सवमयमिव दानमयमिव प्रेममयमिव कलिमयमिवौत्सुक्य. ६ मधुकर. ७ उल्लाप. ८ भ्रमयन्. ९ चकित. १० महोत्सवे. ११ निवर्तित. १२ कृत्वैव कर्ण. १३ आरोपित. १४ प्रसरत्किसलय; सकिसलय.